# लघुसिद्धान्तकौमुद्याम् (तद्धितेषु साधारणप्रत्ययाः)





# लघुसिद्धान्तकौमुद्याम् (तद्धितेषु साधारणप्रत्ययाः)

# तेभ्यः= प्रयोगेभ्यः हिताः= तद्धिताः

लाघवसम्पादनद्वारा प्रयोगाय हितं कुर्वन्ति ते तद्धिताः।





अवधेयम्

‘तद्धिताः’ इति सूत्राधिकारे अष्टाध्याय्याः 1114 सूत्राणि समाविशन्ति।

लघुसिद्धान्तकौमुद्यां तद्धितप्रकरणे अष्टाध्याय्याः 248 सूत्राणि व्याख्यातानि।

लाघवं यथा— ‘वसुदेवस्य पुत्रः पठति’ इति वक्तव्ये ‘वासुदेवः पठति’ इति उक्ते स एवार्थः पदद्वयेन एव सिद्ध्यति। ‘वासुदेवः’ इति पदं पुत्रार्थे तद्धितीय-अण्-प्रत्ययेन निष्पन्नम्।

| | |
|---|---|
| ♣ लोकः— लौकिकः | ♣ मेधा— मेधावी |
| ♣ धर्मः — धार्मिकः | ♣ धनम्— धनवान् |
| ♣ पाणिनिः— पाणिनीयः | ♣ अध्यात्मम्— आध्यात्मिकः |
| ♣ व्याकरणम्— वैयाकरणः | ♣ विनता— वैनतेयः |
| ♣ मीमांसा— मीमांसकः | ♣ दितिः— दैत्यः |
| ♣ ग्रामः— ग्रामीणः | ♣ भवत्— भवदीयः |
| ♣ दशरथः— दाशरथिः | ♣ इतिहासः— ऐतिहासिकः |
| ♣ जनम्— जनता | ♣ पुरोहितम्— पौरोहित्यम् |

✓ विग्रहः— देवदत्तस्य पुत्रः
✓ तद्धितवृत्तिः— दैवदत्तिः
✓ समासवृत्तिः— देवदत्तपुत्रः

‘तद्धिताः-४.१.७६’ इत्यतः ‘निष्प्रवाणिश्च-५.४.१६०’ इत्यन्तं तद्धिताधिकारो वर्तते।

तद्धितमूढाः वैयाकरणाः

प्रियतद्धिता दाक्षिणात्याः





## तद्धितस्य पञ्च महोत्सर्गाः

| | | | | |
|---|---|---|---|---|
| {१. अणधिकारः} | {२. ठगधिकारः} | {३. यदधिकारः} | {४. छाधिकारः} | {५. ठञधिकारः} |
| प्राग्दीव्यतोऽण्-४.१.८३ तः | प्राग्वहतेष्ठक्-४.४.१ तः | प्राग्घिताद्यत्-४.४.७५ तः | प्राक्क्रीताच्छः-५.१.१ तः | प्राग्वतेष्ठञ्-५.१.१८ तः |
| कंसीयपरशव्ययोर्लुक् च-४.३.१६८ | आवसथात्ष्ठल्-४.४.७४ | भावे च-४.४.१४४ | परिखाया ढञ्-५.१.१७ | आकालिकडाद्यन्तवचने-५.१.११४ |

लघुसिद्धान्तकौमुद्याम्
(तद्धितेषु साधारणप्रत्ययाः)

# लघुसिद्धान्तकौमुद्यां तद्धितस्य विभागः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

१.अपत्याधिकारः

२.रक्ताद्यर्थकाः

३.चातुरर्थिकाः

४.शैषिकाः

५.विकारार्थकाः

६.ठगधिकारः

७.यदधिकारः

८.छ-यतोऽधिकारः

९.ठञधिकारः

१०.त्वतलोरधिकारः

११.भवनाद्यर्थकाः

१२.मत्वर्थीयाः

१३.प्राग्दिशीयाः

१४.प्रागिवीयाः

१५.स्वार्थिकाः

# तद्धिताः

## सार्थकाः
- अपत्य-रक्त-इदमाद्यर्थकाः।
- अण्-छ-इत्यादयः प्रत्ययाः।

## स्वार्थिकाः
- प्रकृत्यर्थगत-वैशिष्ट्यमात्रबोधकाः।
- अतिशयेन पटुः= पटुतमः (तमप्)।
  अज्ञातोऽश्वः= अश्वकः (कन्)। इत्यादयः।

## अत्यन्तस्वार्थिकाः
- प्रकृत्यर्थमात्रस्य अभिधायकाः।
- प्रज्ञः एव= प्राज्ञः (अण्)।
- चतुर्वर्णः एव= चातुर्वर्ण्यम् (ष्यञ्)।
  इत्यादयः।

प्रत्ययार्थो यत्र विशेष्यं स विशेष्यतद्धितः । यत्र विशेषणं, स विशेषणतद्धितः । यत्र प्रकृत्यर्थे, स स्वार्थिकतद्धितः इति तद्धितस्य त्रयो विभागाः सम्भवन्ति । तत्र प्रथमं विशेष्यतद्धिताः—

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु साधारणप्रत्ययाः)

# तद्धिते अधिकारत्रयविवेचनम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖अधिकारसूत्रम्—

**सूत्रम्**— समर्थानां प्रथमाद्वा (४,१.८२)

**अर्थः**— इदं पदत्रयमधिक्रियते 'प्राग्दिशो विभक्तिः-५.३.१' इति यावत्॥

**पदपरिचयः**—

- समर्थानाम् (ष. बहु.)
- प्रथमाद् (पं. एक.)
- वा (अव्ययम्)

**तद्धिताधिकारः**--
'तद्धिताः-४.१.७६' इत्यतः 'निष्प्रवाणिश्च-५.४.१६०' इत्यन्तम्।

**किं नाम सामर्थ्यम्**—
अत्र सामर्थ्यं कृतसन्धिकार्यत्वम्। अयं भावः— यत्र सन्धिकार्य-तद्धितप्रत्यययोर्युगपत् प्राप्तौ सत्यां सन्धिकार्यमादौ प्रवर्तते ततः तद्धितप्रत्ययो विधातव्यः। यथा— सु+उत्थित= सूत्थित
सूत्थित+ इञ्= सौत्थितिः।

**समासवत् तद्धितवृत्तेरपि विकल्पः**--
तेनात्र विग्रहवाक्यमपि साधु।

**अत्र प्राथम्यं कीदृशम्**—
'तस्यापत्यम्' इत्यादि तत्तत्सूत्रेषु प्रथमोच्चरितत्वम्। अयं भावः— 'तस्यापत्यम्' इत्यत्र 'तस्य' इति पदं तद्बोध्यः लक्ष्यस्थ ' उपगोः अपत्यम्' इत्यत्र 'उपगु ङस्' इति तस्मादेव अण् प्रत्ययः विधीयते। तथैव 'तेन रक्तं रागात्' इत्यत्र 'तेन' इति पदस्य यः लक्ष्यस्थः तस्मात् (कषायेण रक्तं वस्त्रं= काषायम्), 'ततः आगतः' इत्यत्र 'ततः' इति पदस्य यः लक्ष्यस्थः तस्मात् (महेश्वरात् आगतानि= माहेश्वराणि)। इत्यादयः।

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु साधारणप्रत्ययाः)

# अश्वपत्यादिभ्यः-अण्-प्रत्ययस्य विधानम्



{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अश्वपत्यादिभ्यश्च (४,१.८४)**

**अर्थः— एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु।**

○ अश्वपतेरपत्यादि= आश्वपतम्। गाणपतम्॥

❖ अश्वपतेः अपत्यम्/ जातः/ आगतः/ निवासः/ इदम्।

❖ अश्वपतौ भवः

❖ अश्वपतीनां समूहः।

अश्वपत्यादिगणः—

१.अश्वपति। २.ज्ञानपति । ३.शतपति। ४.धनपति।
५.गणपति। ६.स्थानपति । ७.यज्ञपति । ८.राष्ट्रपति।
९.कुलपति। १०.गृहपति। ११.पशुपति।
१२.धान्यपति। १३.धन्वपति। १४.बन्धुपति।
१५.धर्मपति। १६.सभापति। १७.प्राणपति।
१८.क्षेत्रपति/क्षत्रपति।

अश्वपति ङस्+ अण् (कृत्तद्धितसमासाश्च)
अश्वपति + अण् (सुँपो धातुप्रातिपदिकयोः)
आश्वपति + अ (तद्धितेष्वचामादेः)
आश्वपत् + अ (भसंज्ञा, यस्येति च)
आश्वपत + सुँ/अम् (विशेष्यानुसारलिङ्गव्यवस्था)
आश्वपतम्

गणपतेः अपत्यम्/ गणपतिः देवता अस्येत्यादि
गणपति ङस्+ अण् (कृत्तद्धितसमासाश्च, सुँपो धातुप्रातिपदिकयोः)
गाणपति + अ (तद्धितेष्वचामादेः)
गाणपत् + अ (भसंज्ञा, यस्येति च, विशेष्यानुसारलिङ्गव्यवस्था)
गाणपतम्

लघुसिद्धान्तकौमुद्याम्
(तद्धितेषु साधारणप्रत्ययाः)

# प्राग्दीव्यतीय-४६ अर्थाः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

१ महोत्सर्गः (अण्)

१.तस्यापत्यम् ४.१.९२
२. तेन रक्तं रागात् ४.२.१
३. नक्षत्रेण युक्तः कालः ४.२.३
४. दृष्टं साम ४.२.७
५. परिवृतो रथः ४.२.१०
६. तत्रोद्धृतममत्रेभ्यः ४.२.१४
७. स्थण्डिलाच्छयितरि व्रते ४.२.१५
८. संस्कृतं भक्षाः ४.२.१६
९. सास्मिन्पौर्णमासीति संज्ञायाम् ४.२.२१
१०. सास्य देवता ४.२.२४
११. तस्य समूहः ४.२.३७
१२. विषयो देशे ४.२.५२
१३. सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ४.२.५५
१४. तदस्यां प्रहरणमिति क्रीडायां णः ४.२.५७
१५. तदधीते १६. तद्वेद ४.२.५९
१७. तदस्मिन्नस्तीति देशे तन्नाम्नि ४.२.६७
१८. तेन निर्वृत्तम् ४.२.६८
१९.तस्य निवासः ४.२.६९
२०. अदूरभवश्च ४.२.७०

अथ शैषिकाः- यहाँ से 'तस्येदम्' तक के अर्थ शैषिक अर्थ हैं—

२१.तत्र जातः ४.३.२५
२२. कृतलब्धक्रीतकुशलाः ४.३.३८
२३. प्रायभवः ४.३.३९
२४. संभूते ४.३.४१
२५. कालात्साधुपुष्प्यत्पच्यमानेषु ४.३.४३
२६. उप्ते च ४.३.४४
२७. देयमृणे ४.३.४७
२८. व्याहरति मृगः ४.३.५१
२९. तदस्य सोढम् ४.३.५२
३०. तत्र भवः ४.३.५३
३१. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ४.३.६६
३२. तत आगतः ४.३.७४
३३. प्रभवति ४.३.८३
३४.तद्गच्छति पथिदूतयोः ४.३.८५
३५. अभिनिष्क्रामति द्वारम् ४.३.८६
३६. अधिकृत्य कृते ग्रन्थे ४.३.८७
३७. सोऽस्य निवासः ४.३.८९
३८. अभिजनश्च ४.३.९०
३९. भक्तिः ४.३.९५
४०. तेन प्रोक्तम् ४.३.१०१
४१. तेनैकदिक् ४.३.११२
४२. उपज्ञाते ४.३.११५
४३. कृते ग्रन्थे ४.३.११६
४४. तस्येदम् ४.३.१२०

(इति शैषिकाः)

४५. तस्य विकारः ४.३.१३४
४६. अवयवे च प्राण्यौषधिवृक्षेभ्यः ४.३.१३५

❖ लघुसिद्धान्तकौमुद्यां सङ्ग्रहीताः २९ प्राग्दीव्यतीयार्थाः।

२ महोत्सर्गः (ठक्)

१.प्राग्वहतेष्ठक् ४.४.१
२. तेन दीव्यति खनति जयति जितम् ४.४.२

| १.अपत्याधिकारः | २.रक्ताद्यर्थकाः | ३.चातुरर्थिकाः | ४.शैषिकाः | ५.विकारार्थकाः |
|---|---|---|---|---|

# दिति-अदिति-पत्युत्तरप्रातिपदिकेभ्यः-ण्य-प्रत्ययविधिः



{मूलपाठः}

❖ ण्य-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (७,२.११७)

अर्थः— दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतियेष्वर्थेषु ण्यः स्यात्।

- अणोऽपवादः।
- दितेरपत्यं= दैत्यः।
- अदितेरादित्यस्य वा—

❖ यमो लोपविधायकं विधिसूत्रम्—

सूत्रम्— **हलो यमां यमि लोपः** (४,१.८५)

अर्थः— हलः परस्य यमो लोपः स्याद् वा यमि। इति यलोपः।

- आदित्यः।
- प्राजापत्यः।

१. दिति
२. अदिति
३. पत्युत्तरपद




दिति ङस्+ ण्य (कृत्तद्धितसमासाश्च)
दिति+ य (सुँपो धातुप्रातिपदिकयोः)
दैति + य (तद्धितेष्वचामादेः)
दैत् + य (भसंज्ञा, यस्येति च)
**दैत्यः**

अदितेः अपत्यम्
अदिति ङस्+ ण्य
अदिति+ य
आदिति + य
आदित् + य
**आदित्यः**

आदित्यस्य अपत्यम्
आदित्य ङस्+ ण्य
**आदित्य् + य**
आदित् + य
आदित्यः, आदित्य्यः

प्रजापतेः अपत्यम्
प्रजापति ङस्+ ण्य
प्राजापत्+ य
**प्राजापत्यः**



# यञ्-अञ्-ईकक्-प्रत्ययविधायकानि वार्तिकानि



{मूलपाठः}

❖ यञ्-अञ्-प्रत्ययविधायकं वार्तिकम्—

❖ **देवाद्यञञौ।**

अर्थः— देवशब्दात् प्राग्दीव्यतीयार्थेषु तद्धितसञ्ज्ञकौ यञ्-अञौ प्रत्ययौ स्तः।

○ दैव्यम्, दैवम्।

❖ यञ्-प्रत्यय-टिलोपविधायकं वार्तिकम्—

❖ **बहिषष्टिलोपो यञ्च।**

अर्थः— 'बहिस्'शब्दात् प्राग्दीव्यतीयार्थेषु तद्धितसञ्ज्ञकः यञ्-प्रत्ययः टिलोपश्च स्यात्। बाह्यः।

❖ ईकक्-प्रत्ययविधायकं वार्तिकम्—

❖ **ईकक्च।**

अर्थः— 'बहिस्'शब्दात् प्राग्दीव्यतीयार्थेषु तद्धितसञ्ज्ञकः ईकक्-प्रत्ययः टिलोपश्च स्यात्।

❖ वृद्धिविधायकं विधिसूत्रम्—

सूत्रम्— **किति च (७,२.११८)**

अर्थः— किति तद्धिते चाचामादेरचो वृद्धिः स्यात्। बाहीकः।

देवस्य अपत्यम् इत्यादि।
देव ङस्+ यञ् (कृत्तद्धितसमासाश्च)
देव+ य (सुँपो धातुप्रातिपदिकयोः)
दैव + य (तद्धितेष्वचामादेः)
दैव् + य (भसंज्ञा, यस्येति च)
**दैव्यम्**

देव ङस्+ अञ्
देव + अ
दैव् + अ
**दैवम्**

बहिर्भवः
बहिस् ङि+ यञ्
बह् + य
बाह् + य
**बाह्यः**

बहिर्भवः
बहिस् ङि+ ईकक्
बह् + ईक
बाह् + ईक
**बाहीकः**

# यत्-अञ्-प्रत्यययोः विधानम्



{मूलपाठः}

❖ यत्-प्रत्ययविधायकं वार्तिकम्—

❖ **गोरजादिप्रसङ्गे यत्।**

अर्थः— अजादिप्रत्ययप्रसङ्गे गोशब्दात् प्राग्दीव्यतीयार्थेषु तद्धितसंज्ञकः यत्-प्रत्ययः भवति।

○ गोरपत्यादि= गव्यम्॥

अञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— उत्सादिभ्योऽञ् (४,१.८६)**

अर्थः— प्राग्दीव्यतीयार्थेषु उत्सादिगणपठितेभ्यः तद्धितसंज्ञकः अञ्-प्रत्ययः भवति।

○ औत्सः॥

**॥ इत्यपत्यादिविकारान्तार्थ साधारणप्रत्ययाः॥ १॥**

गोरपत्यम्, गवि भवम्, गोभ्यः आगतम्, गोरिदम्।
गो ङस् + यत्
गो + य
ग् अव् + य
गव्यम्

उत्से भवः
उत्स ङि+ अञ्
औत्स+ अ
औत्स् + अ
औत्सः

लघुसिद्धान्तकौमुद्याम्
(तद्धितेषु अपत्याधिकारः)

# नञ्-स्नञ्-प्रत्यययोर् विधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ नञ्-स्नञ् अधिकारसूत्रम्—

**सूत्रम्—** स्त्री-पुंसाभ्यां नञ्-स्नञौ भवनात् (४,१.८७)

**अर्थः—** 'धान्यानां भवने..' इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमात् नञ्-स्नञौ स्तः।

○ स्त्रैणः। पौंस्नः॥

धान्यानां भवने क्षेत्रे खञ्— ५.२.१

❖ स्त्रियाः अपत्यम्, स्त्रीषु भवः, स्त्रीणां समूहः, स्त्रीभ्यः आगतः, स्त्रीभ्यो हितम्, स्त्रीणाम् अयम्।

स्त्री ङस्+ नञ् (कृत्तद्धितसमासाश्च)

स्त्री + न (सुँपो धातुप्रातिपदिकयोः)

स्त्रै + ण (तद्धितेष्वचामादेः-वृद्धिः। णत्वम्।)

स्त्रैणः

❖ पुसोऽपत्यम्, पुंसु भवः, पुंसा समूहः, पुंभ्यः आगतः, पुंभ्यो हितः, पुंसाम् अयम्।

पुंस् ङस्+ स्नञ् (कृत्तद्धितसमासाश्च)

पुंस्+ स्न (सुँपो धातुप्रातिपदिकयोः)

पौंस्+ स्न (तद्धितेष्वचामादेः— वृद्धिः।)

पौं+ स्न (स्वादिष्वसर्वनामस्थाने-पद। संयोगान्तस्य लोपः)

पौंस्नः

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु अपत्याधिकारः)

# अपत्ये गोत्रापत्ये च प्रत्ययविधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ अपत्यार्थे-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तस्यापत्यम् (४,१.९२)**

अर्थः—षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः॥

❖ गुणादेशविधायकं विधिसूत्रम्—

**सूत्रम्— ओर्गुणः (६,४.१४६)**

अर्थः— उवर्णान्तस्य भस्य गुणस्तद्धिते।

○ उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः॥

❖ गोत्रसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— अपत्यं पौत्रप्रभृति गोत्रम् (४,१.१६२)**

अर्थः— अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्॥

एकापत्यप्रत्ययनियामकं नियमसूत्रम्—

**सूत्रम्— एको गोत्रे (४,१.९३)**

अर्थः— गोत्रे एक एवापत्यप्रत्ययः स्यात्।

○ उपगोर्गोत्रापत्यमौपगवः॥

उपगोः अपत्यम्/ उपगोः गोत्रापत्यम्

उपगु ङस् + अण्

उपगु + अ

औपगु + अ (तद्धितेष्वचामादेः)

औपगो + अ (यचि भम्। ओर्गुणः।)

औपगवः



१.मूलपुरुषः

२. अनन्तरापत्यम्/साक्षादपत्यम्/पुत्रः

३. पौत्रः

४. प्रपौत्रः

५.

गोत्रम्

# गोत्रापत्ये यञ्-प्रत्ययस्य विधानम्



{मूलपाठः}

यञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— गर्गादिभ्यो यञ् (४,१.१०५)**

अर्थः— गोत्रापत्ये।

- गर्गस्य गोत्रापत्यं= गार्ग्यः। वात्स्यः॥

❖ तद्धितलुक्-विधायकं विधिसूत्रम्—

**सूत्रम्— यञञोश्च (२,४.६४)**

अर्थः— गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्।

- गर्गाः। वत्साः॥

**गर्गस्य गोत्रापत्यानि**

गर्ग ङस् + यञ्

गर्ग+ जस्

गर्गाः

**गर्गस्य गोत्रापत्यम्**

गर्ग ङस् + यञ्

गर्ग + य

गार्ग + य (तद्धितेष्वचामादेः)

गार्ग् + य (यस्येति च)

गार्ग्यः

**वत्सस्य गोत्रापत्यम्**

वत्सङस् + यञ्

वत्स + य

वात्स + य (तद्धितेष्वचामादेः)

वात्स् + य (यस्येति च)

वात्स्यः

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु अपत्याधिकारः)

# युव-प्रत्ययस्य विधानम्



{मूलपाठः}

❖ युवसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— जीवति तु वंश्ये युवा (४,१.१६३)**

**अर्थः—** वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसञ्ज्ञमेव स्यात्॥

❖ नियमसूत्रम्—

**सूत्रम्— गोत्राद्यून्यस्त्रियाम् (४,१.९४)**

**अर्थः—** यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा॥

❖ फक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— यञिञोश्च (४,१.१०१)**

**अर्थः—** गोत्रे यौ यञिञौ तदन्तात्फक् स्यात्॥



१.मूलपुरुषः



२. अनन्तरापत्यम्/साक्षादपत्यम्/पुत्रः



३. पौत्रः

४. प्रपौत्रः

५.

युवा

गर्गस्य गोत्रापत्यं युवा/ गर्गस्य युवापत्यम्
गार्ग्य ङस् + फक्
गार्ग्य + फ

गर्गस्य गोत्रापत्यम्
गर्ग ङस् + यञ्
गर्ग + य
गार्ग + य (तद्धितेष्वचामादेः)
गार्ग् + य (यस्येति च)
गार्ग्यः

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु अपत्याधिकारः)

# युव-प्रत्ययस्य विधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ आयनाद्यादेशविधायकं विधिसूत्रम्—

**सूत्रम्**— आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् (७,१.२)

**अर्थः**— प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् एते स्युः।

- गर्गस्य युवापत्यं गार्ग्यायणः।
- दाक्षायणः॥

**प्रत्ययादेः**

| फ् | ढ् | ख् | छ् | घ् |
|---|---|---|---|---|
| आयन् | एय् | ईन् | ईय् | इय् |

गार्ग्य + फ
गार्ग्य + आयन् अ
गार्ग्य् + आयन् अ
गार्ग्यायन
गार्ग्यायणः

दक्षस्य गोत्रापत्यं युवा/ दक्षस्य युवापत्यम्
गोत्रापत्ये 'अत इञ्' इत्यनेन 'दाक्षि' इति रूपम्
दाक्षि ङस् + फक्
दाक्षि + आयन् अ
दाक्ष्+ आयन् अ
दाक्षायन= दाक्षायणः

# लघुसिद्धान्तकौमुद्याम् (तद्धितेषु अपत्याधिकारः)

# इञ्-प्रत्ययस्य विधानम्



{मूलपाठः}

इञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अत इञ् (४,१.९५)**

अर्थः— अदन्तात् षष्ठ्यन्ताद् इञ् स्यात् अपत्येऽर्थे ।

- दाक्षिः ॥

इञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— बाह्वादिभ्यश्च (४,१.९६)**

अर्थः— बाह्वादिषष्ठ्यन्तसमर्थप्रातिपदिकेभ्यः इञ् स्यादपत्येऽर्थे।

- बाहविः। औडुलोमिः।

**वार्तिकम्— लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः।**

अर्थः— लोमन् शब्दात् अपत्यार्थे बहुत्वविवक्षायां तद्धितसंज्ञकः 'अ' प्रत्ययो भवति।

- उडुलोमाः। आकृतिगणोऽयम् ॥

दक्षस्य अपत्यम्
दक्ष ङस् + इञ्
दक्ष + इ
दाक्ष + इ (तद्धितेष्वचामादेः)
दाक्ष् + इ (यस्येति च)
**दाक्षिः**

बाहोः अपत्यम्
बाहु ङस् + इञ्
बाहु + इ
बाहो + इ (ओर्गुणः)
बाह् अव् + इ
**बाहविः**

उडुलोम्नः अपत्यम्
उडुलोमन् ङस् + इञ्
औडुलोमन् + इ
औडुलोम् + इ (नस्तद्धिते)
**औडुलोमिः**

उडुलोम्नः अपत्यानि
उडुलोमन् ङस् + अ
उडुलोमन् + अ
उडुलोम् + अ (नस्तद्धिते)
उडुलोम + जस्
**उडुलोमाः**

लघुसिद्धान्तकौमुद्याम्
(तद्धितेषु अपत्याधिकारः)

# अञ्-प्रत्ययस्य विधानम्



{मूलपाठः}

अञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अनृष्यानन्तर्ये बिदादिभ्योऽञ् (४,१.१०४)**

**अर्थः—** एभ्योऽञ् गोत्रे, ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे।

- चेन्नै संस्करणे— ये त्वत्रानृषयस्तेभ्योऽनन्तरापत्येऽन्यत्र तु गोत्रेऽञ् स्यात्।

- बिदस्य गोत्रं= बैदः। बैदौ। बिदाः।
- पुत्रस्यापत्यं= पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः॥

**बिदादिगणः—**

बिद। उर्व। कश्यप। कुशिक। भरद्वाज। उपमन्यु। किलात (किलालप)। किदर्भ। विश्वानर। ऋष्टिषेण। ऋतभाग। हर्यश्व। प्रियक। आपस्तम्ब। कूचवार। शरद्वत्। शुनक। धेनु। गोपवन। शिग्रु। बिन्दु। भाजन। अश्वावतान। श्यामाक। श्यमाक (श्यामक)। श्यापर्ण। हरित। किन्दास। वह्यस्क। अर्कलूष। वध्योष (बध्योग)। विष्णुवृद्ध। प्रतिबोध। रथन्तर। रथीतर। गविष्ठिर। निषाद। मठर। मृद (मृदु)। पुनर्भू। पुत्र। दुहितृ। ननान्दृ। **गणसूत्रम्—** परस्त्री परशुं च। सृदाकु। पृदाकु। शबर। सम्बक। शाबली। श्यायक। अलस॥

**बिदस्य गोत्रापत्यम्**
बिद ङस् + अञ्
बैद + अ
बैद् + अ (यस्येति च)
**बैदः**

**बिदस्य गोत्रापत्यानि**
~~बिद ङस् + अञ्~~
बिद + जस् (यञञोश्च)
बिद + अस्
**बिदाः**

**पुत्रस्य अपत्यम्**
पुत्र ङस् + अञ्
पौत्र + अ (तद्धितेष्वचामादेः)
पौत्र् + अ(यस्येति च)
**पौत्रः**

**दुहितुः अपत्यम्**
दुहितृ ङस् + अञ्
दौहितृ + अ
दौहित् र् + अ
**दौहित्रः**

| | | |
|---|---|---|
| बैदः | बैदौ | बिदाः |
| बैदम् | बैदौ | बिदान् |
| बैदेन | बैदाभ्याम् | बिदैः |
| बैदाय | बैदाभ्याम् | बिदेभ्यः |
| बैदात्-द् | बैदाभ्याम् | बिदेभ्यः |
| बैदस्य | बैदयोः | बिदानाम् |
| बैदे | बैदयोः | बिदेषु |

# अण्-प्रत्ययस्य विधानम्



{मूलपाठः}

अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** शिवादिभ्योऽण् (४,१.११२)

**अर्थः—** अपत्ये शिवादिगणस्य शब्देभ्यः अण्-प्रत्ययः स्यात्।

- शैवः। गाङ्गः॥

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** ऋष्यन्धक-वृष्णि-कुरुभ्यश्च (४,१.११४)

**अर्थः—** ऋषिवाचिशब्देभ्यः अन्धक-कुलवाचिशब्देभ्यः वृष्णि-कुलवाचिशब्देभ्यः तथा कुरु-कुलवाचिशब्देभ्यः 'तस्य अपत्यम्' अस्मिन् अर्थे अण्-प्रत्ययः स्यात्।

- ऋषिभ्यः— वासिष्ठः। वैश्वामित्रः।
- अन्धकेभ्यः— श्वाफल्कः।
- वृष्णिभ्यः— वासुदेवः।
- कुरुभ्यः— नाकुलः। साहदेवः॥

शिवस्य अपत्यम्
शिव + अण्
शैव + अ (तद्धितेष्वचामादेः)
शैव + अ (यस्येति च)
शैवः (गणेशः)

गङ्गायाः अपत्यम्
गङ्गा + अण्
गाङ्गा + अ
गाङ्ग् + अ (यस्येति च)
गाङ्गः (भीष्मः)

वशिष्ठस्य अपत्यम्= वासिष्ठः

विश्वामित्रस्य अपत्यम्= वैश्वामित्रः

**अक्रूर** कृष्णकालीन एक यादववंशी मान्य व्यक्ति थे। ये सात्वत वंश में उत्पन्न वृष्णि के पौत्र थे। इनके पिता का नाम श्वफल्क था (जिन्हें जयन्त भी कहते हैं) जिनके साथ काशी के राजा अपनी पुत्री गांदिनी का विवाह किया था। इन्हीं दोनों की संतान होने से अक्रूर श्वाफल्कि तथा गांदिनीनंदन के नाम से भी प्रसिद्ध थे। मथुरा के राजा कंस की सलाह पर बलराम तथा कृष्ण को वृन्दावन से मथुरा लाए (भागवत १०.४०)।

श्वफल्कस्य अपत्यम्= श्वाफल्कः
वसुदेवस्य अपत्यम्= वासुदेवः
नकुलस्य अपत्यम्= नाकुलः (शतानीक)
सहदेवस्य अपत्यम्= साहदेवः

# शिवादिगणः

शिव। प्रोष्ठ। प्रोष्ठिक। चण्ड। जम्भ। मुनि। सन्धि। भूरि। कुठार। ककुभ् (ककुभा) । अनभिम्लान। कोहित । मुख । ककुस्थ । कहोड। कोहड । कहूय । कहय । रोध । कपिञ्जल । ~~कुपिञ्जल~~ । खञ्जन । वतण्ड ।तृणकर्ण ।क्षीरह्रद ।जलह्रद ।परिल ।पथिक ।पिष्ट ।हैहय ।पार्षिका ।गोपिका ।कपिलिका ।जटिलिका ।बधिरिका ।मञ्जिरक ।मजिरक ।वृष्णिक ।खञ्जास ।खञ्जाह ।कर्मार ।रेख ।लेख। आलेखन। विश्रवण। रवण। वर्तनाक्ष। ग्रीवाक्ष । पिटक। पिटाक। तृक्षाक। नभाक। ऊर्णनाभ। जरत्कारु। पृथा । उत्क्षेप । पुरोहोतिका । सुरोहितिका । मुरोहिका । आर्यश्वेत। आर्यश्वेत । सुपिष्ट। मसूरकर्ण। मयूरकर्ण । खर्जूरकर्ण । कदूरक । तक्षन् । ऋष्टिषेण। गङ्गा। विपाश। यस्क। लह्य। द्रुह्य । अयस्थूण। तृणकर्ण ।तृण ।कर्ण ।पर्ण ।भलन्द ।विरूपाक्ष। भूमि। इला। सपत्नी।

**गणसूत्रम्—** द्व्यचो नद्याः। **गणसूत्रम्—** त्रिवेणी त्रिवणं च।

॥ शिवादिः आकृतिगणः॥

# अण्-प्रत्ययस्य विधानम्



{मूलपाठः}

❖ उकारादेश-अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** मातुरुत् सङ्ख्या-सम्- भद्रपूर्वायाः (४,१.११५)

**अर्थः—** संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च।

- द्वैमातुरः।
- षाण्मातुरः।
- सांमातुरः।
- भाद्रमातुरः॥

भद्रा चासौ माता= भद्रमाता (विशेषणं विशेष्येण बहुलम्,पुंवत्)
भद्रमातुः अपत्यम्>
भद्रमातृ/भद्रमातुर्+ अण्
भाद्रमातुर्+ अ = भाद्रमातुरः

❖ कनीनादेश-अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** कन्यायाः कनीन च (४,१.११६)

**अर्थः—** अपत्यार्थे कन्याशब्दस्य स्थाने 'कनीन'आदेशः चादण् स्यात्।

- कानीनो= व्यासः कर्णश्च॥

कन्यायाः अपत्यम्
कन्या ङस्+ अण्
कनीन+ अण्
कानीन + अ
कानीन् + अ (यस्येति च)
कानीनः

द्वयोः मात्रोः अपत्यम् > द्वि + ओस् मातृ + ओस्
'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेन समासे द्विमात्रोः इति जाते ततः 'मातुरुत् सङ्ख्या-सम्-भद्रपूर्वायाः' इत्यनेन ऋकारस्य स्थाने 'उरण् रपरः' इत्यस्य साहाय्येन उरादेशे अण्-प्रत्यये कृते द्विमातुर् + अण् इति जाते 'तद्धितेष्वचामादेः' इत्यनेन आदिवृद्धौ विभक्तिकार्ये च कृते द्वैमातुरः (गणेशः) इति सिद्धम्।

षण्णां मातॄणाम् अपत्यम् (षष् आम्+ मातृ आम्)
षष् मातुर्+ अण्
षाड् मातुर्+ अ (झलां जशोऽन्ते)
षाण् मातुर्+ अ (यरोऽनुनासिकेऽनुनासिको वा)
षाण्मातुरः (कार्तिकेयः)

समीचीना माता= सम्माता (कुगतिप्रादयः)
सम्मातुः अपत्यम् > सम्मातृ/सम्मातुर्+ अण्
साम्मातुर्+ अ = साम्मातुरः

# ढक्-प्रत्ययस्य विधानम्



{मूलपाठः}

❖ ढक्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— स्त्रीभ्यो ढक् (४,१.१२०)

अर्थः— स्त्रीप्रत्ययान्तेभ्यो ढक् (स्याद् अपत्ये)।

- वैनतेयः॥

विनतायाः अपत्यम्
विनता ङस्+ ढक्
वैनता + ढ (किति च)
वैनता + एय (आयनेयीनीयि..)
वैनत् + एय (यस्येति च)
वैनतेयः

ढक्-प्रत्ययस्य अन्यान्यप्युदाहरणानि—

- सुपर्णायाः अपत्यम्= सौपर्णेयः
- द्रौपद्याः अपत्यम्= द्रौपदेयः
- कुन्त्याः अपत्यम्= कौन्तेयः
- वासवदत्तायाः अपत्यम्= वासवदत्तेयः



लघुसिद्धान्तकौमुद्याम् (तद्धितेषु अपत्याधिकारः)

# यत्-प्रत्ययस्य विधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ यत्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** राजश्वशुराद्यत् (४,१.१३७)

**अर्थः—** 'राजन्'शब्दात् तथा 'श्वशुर'शब्दाच्चापत्ये यत्-प्रत्ययः स्यात् ।

**वार्तिकम्—** राज्ञो जातावेवेति वाच्यम् ॥

**अर्थः—** प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्या तदैव राजन्-शब्दात् यत् स्यात्।

❖ प्रकृतिभावविधायकं विधिसूत्रम्—

**सूत्रम्—** ये चाभावकर्मणोः (६,४.१६८)

**अर्थः—** यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः।

- राजन्यः। ~~श्वशुर्यः॥~~

जातावेवेति किम् ? –

❖ प्रकृतिभावविधायकं विधिसूत्रम्—

**सूत्रम्—** अन् (६,४.१६७)

**अर्थः—** अन् प्रकृत्या स्यादणि परे।

- राजनः।
- श्वशुर्यः॥

राज्ञः अपत्यं जातिः
राजन् ङस्+ यत्
राजन्+ य (नस्तद्धिते इति प्राप्ते)
राजन्यः (क्षत्रियः)

राज्ञः अपत्यम्
राजन् ङस्+ अण्
राजन्+ अ (नस्तद्धिते इति प्राप्ते)
राजनः (वैश्य-शूद्रजात्युत्पन्नकन्यायां अथवा दास्यादौ क्षत्रियादुत्पन्नम्)

श्वशुरस्य अपत्यम्
श्वशुर ङस्+ यत्
श्वशुर् + य ((यस्येति च))
श्वशुर्यः(श्यालः)

लघुसिद्धान्तकौमुद्याम्
(तद्धितेषु अपत्याधिकारः)

# घ-ठक्-प्रत्यययोर् विधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ घ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** क्षत्राद् घः (४,१.१३८)

**अर्थः—** 'तस्य अपत्यम्' अस्मिन् अर्थे 'क्षत्र'शब्दात् घ-प्रत्ययः स्यात्।

○ क्षत्रियः। जातावित्येव।

○ क्षात्रिरन्यत्र॥

क्षत्रस्य अपत्यं (शूद्रादौ उत्पन्नः)
क्षत्र ङस्+ इञ्
क्षात्र + इ
क्षात्रिः

क्षत्रस्य अपत्यं जातिः
क्षत्र ङस्+ घ
क्षत्र + इय
क्षत्र् + इय (यस्येति च)
क्षत्रियः

❖ ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** रेवत्यादिभ्यष्ठक् (४,१.१४६)

**अर्थः—** 'तस्य अपत्यम्' अस्मिन् अर्थे रेवत्यादिगणस्य शब्देभ्यः ठक्-प्रत्ययः स्यात्।

रेवती। अश्वपाली। मणीपाली। द्वारपाली। वृकवञ्चिन्। वृकग्राह। कर्णग्राह। दण्डग्राह। कुक्कुटाक्ष।

रेवत्याः अपत्यम्
रेवती ङस्+ ठक्
रेवती + इक
रेवत् + इक (यस्येति च)
रैवतिकः

❖ इक्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्—** ठस्येकः॥ (७,३.५०)

**अर्थः—** अङ्गात्परस्य ठस्य 'इक' आदेशः स्यात्।

○ रैवतिकः॥

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु अपत्याधिकारः)

# तद्राजसञ्ज्ञकप्रत्ययानां विधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ अञ्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— जनपदशब्दात्क्षत्रियादञ् (४,१.१६८)

अर्थः— जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये। पाञ्चालः।

सरलार्थः— जनपदवाची सन् यः क्षत्रियवाची शब्दः तत्प्रकृतिकात् षष्ठ्यन्ताद् अपत्यऽर्थेऽञ्-प्रत्ययः स्यात्।

वार्तिकम्— क्षत्रियसमानशब्दाज्जनपदात् तस्य राजन्यपत्यवत्।

अर्थः— क्षत्रियवाचकः शब्दो देशवाचकश्चेत् ततः 'तस्य देशस्य राजा' इत्यर्थे अपत्यवत् प्रत्यया भवन्ति।

अर्थात्— अपत्येऽर्थे ये प्रत्ययाः उक्ताः ते 'तस्य देशस्य राजनि' अपि भवेयुरिति भावः।

○ पञ्चालानां राजा पाञ्चालः।

वार्तिकम्— पूरोरण् वक्तव्यः। उदाहरणम्— पौरवः।

अर्थः— अपत्ये राजनि चार्थे पुरुशब्दाद् अण्-प्रत्ययः स्यात्।

वार्तिकम्— पाण्डोर्ड्यण्। उदाहरणम्— पाण्ड्यः॥

अर्थः— अपत्ये राजनि चार्थे पाण्डुशब्दाद् ड्यण्-प्रत्ययः स्यात्।

पञ्चालस्य अपत्यम्
पञ्चाल ङस्+ अञ्
पाञ्चाल् + अ
पाञ्चालः

पञ्चालानां राजा
पञ्चाल आम्+ अञ्
पाञ्चाल् + अ
पाञ्चालः

पञ्चाल-अङ्ग-वङ्ग-मगध-कलिङ्गादयः शब्दाः देशवाचिनः राजवाचिनश्च।

पूरोः अपत्यम्/पूरूणां राजा
पूरु ङस्+ अण्
पौरो + अ (ओर्गुणः)
पौरवः

पाण्डोः अपत्यम्/पाण्डूनां जनपदानां राजा
पाण्डु ङस्+ ड्यण्
पाण्ड् + य (टेः)
पाण्ड्यः (दक्षिणदिग्भवदेशानां राजा)

# तद्राजसञ्ज्ञकप्रत्ययानां विधानम्



{मूलपाठः}

❖ ण्य-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— कुरुनादिभ्यो ण्यः (४,१.१७२)**

अर्थः— कुरुशब्दात् नकारादिशब्दाच्च जनपदक्षत्रियवाचकेभ्योऽपत्ये राजनि च ण्य-प्रत्ययः स्यात्।

○ कौरव्यः। नैषध्यः॥

❖ तद्राजसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— ते तद्राजाः (४,१.१७४)**

अर्थः— अञादयस्तद्राजसंज्ञाः स्युः॥

❖ लुक्-विधायकं विधिसूत्रम्—

**सूत्रम्— तद्राजस्य बहुषु तेनैवास्त्रियाम् (२,४.६२)**

अर्थः— बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम्।

○ इक्ष्वाकवः। पञ्चालाः इत्यादि॥



कुरोः अपत्यम्/कुरूणां जनपदानां राजा
कुरु ङस्+ ण्य
कौरो + य (ओर्गुणः,वान्तो यि प्रत्यये)
**कौरव्यः**

निषधस्यापत्यम्/निषधानां जनपदानां राजा
निषध ङस्+ ण्य
नैषध् + य (ओर्गुणः,वान्तो यि प्रत्यये)
**नैषध्यः**

- पञ्चालस्यापत्यानि/पञ्चालानां जनपदानां राजानः=पञ्चालाः।
- इक्ष्वाकोरपत्यानि/इक्ष्वाकूणां जनपदानां राजानः=इक्ष्वाकवः।

आदिपदेन पूरवः पाण्डवः कुरवः निषधाः इत्यादीनां ग्रहणम्

# लघुसिद्धान्तकौमुद्याम् (तद्धितेषु अपत्याधिकारः)

# तद्राजसञ्ज्ञकप्रत्ययानां विधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

○ लुक्-विधायकं विधिसूत्रम्—

**सूत्रम्— कम्बोजाल्लुक् (४,१.१७५)**

**अर्थः—** अस्मात्तद्राजस्य लुक्।

○ कम्बोजः। कम्बोजौ।

**वार्तिकम्— कम्बोजादिभ्य इति वक्तव्यम्।**

**अर्थः—** सूत्रे ‘कम्बोजाद्’ इत्यस्य स्थाने कम्बोजादिभ्य इति वक्तव्यम्।

○ चोलः। शकः। केरलः। यवनः॥

**॥ इत्यपत्याधिकारः॥ २॥**

चेन्नै संस्करणे— कम्बोजौ।चोलः। शकः। इति नास्ति।

1. कम्बोजस्य अपत्यम्/कम्बोजानां जनपदानां राजा= कम्बोजः
2. कम्बोजस्य अपत्ये/कम्बोजानां जनपदानां राजानौ= कम्बोजौ
3. कम्बोजस्यापत्यानि/कम्बोजानां जनपदानां राजानः= कम्बोजाः

कम्बोज ङस्+ अञ्

कम्बोजः

1. चोलस्य अपत्यम्/चोलानां जनपदानां राजा= चोलः, चोलौ, चोलाः।
2. शकस्य अपत्यम्/शकानां जनपदानां राजा= शकः, शकौ, शकाः।
3. केरलस्य अपत्यम्/केरलानां जनपदानां राजा= केरलः केरलौ केरलाः।
4. यवनस्य अपत्यम्/यवनानां जनपदानां राजा= यवनः यवनौ यवनाः।

# साधारणप्रत्यय-अपत्याधिकारप्रकरणयोः परीक्षणम्

**१.तद्धितप्रत्ययानां विधानं भवति—**

क. धातुभ्यः

**ख. प्रातिपदिकेभ्यः**

ग. तिङन्तेभ्यः

घ. प्रत्ययेभ्यः

**२. तद्धिते कति महोत्सर्गाः सन्ति—**

क. द्वौ

ख. त्रयः

ग. चत्वारः

**घ. पञ्च**

**३. 'समर्थानां प्रथमाद्वा' इत्यतः कति पदानि अधिक्रियन्ते—**

क. द्वे

**ख. त्रीणि**

ग. चत्वारि

घ. एकम्

**४. अश्वपत्यादिगणपठितेभ्यः शब्देभ्यः कस्य प्रत्ययस्य विधानं भवति ?**

**क. अण्**

ख. ण्य

ग. यत्

घ. अञ्

**५. 'गणपतिः देवता अस्ये'ति विग्रहे किं रूपं साधु—**

क. गाणपत्यः

**ख. गाणपतः**

ग. गणपतिः

घ. गणपातम्

**६. प्राग्दीव्यतीयेष्वर्थेष्वयमर्थो नान्तर्भवति—**

क. तस्यापत्यम्

ख. सास्य देवता

**ग. तदस्य परिमाणम्**

घ. तत आगतः

**७. 'आदित्यस्य अपत्यम्' इति विग्रहे किं रूपं साधु ?**

**क. आदित्यः**

ख. आदितेयः

ग. अदितेः

घ. आदित्ययः

**८. 'प्राजापत्यः' इत्यत्र कः प्रत्ययः—**

क. अण्

ख. अञ्

**ग. ण्य**

घ. त्यप्

**९. 'बाह्यः' इत्यत्र कः प्रत्ययः ?**

क. ईकक्

ख. ण्य

ग. यक्

**घ. यञ्**

**१०. 'किति च' इति सूत्रेण भवति—**

क. ककारस्य इत्सञ्ज्ञा

**ख. आदिवृद्धिः**

ग. ककारस्य लोपः

घ. वृद्धिः

**११. 'गव्यम्' इति रूपम् अस्मिन् विग्रहवाक्ये न सम्भवति—**

**गावः सन्ति अस्मिन्**

क. गोरपत्यम्

ख. गोभ्यः आगतम्

ग. गोरिदम्

**१२. 'स्त्रैणः' इत्यत्र कः प्रत्ययः ?**

क. अण्

ख. स्नञ्

**ग. नञ्**

घ. इण्

**१३. 'उपगोः गोत्रापत्यम्' इति विग्रहे किं रूपं साधु ?**

क. औपगः

ख. उपगुः

ग. औपगविः

घ. औपगवः

**१४. गोत्रसञ्ज्ञा न भवति—**

क. पौत्रस्य

ख. प्रपौत्रस्य

**ग. मूलपुरुषस्य**

घ. शततमस्य वंश्यस्य

**१५. 'गर्गस्य गोत्रापत्यानि' इति विग्रहे किं रूपं साधु ?**

**क. गर्गाः**

ख. गार्ग्यः

ग. गार्गः

घ. गार्ग्याणि

**१६. युवसञ्ज्ञा भवति—**

क. मूलपुरुषस्य

ख. अपत्यस्य

ग. पौत्रस्य

**घ. वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादिः तस्य**

**१७. युवसञ्ज्ञकप्रत्ययस्य विधानं भवति—**

**क. गोत्रप्रत्ययान्तात्**

ख. मूलपुरुषवाचकात् प्रातिपदिकात्

ग. अपत्यप्रत्ययान्तात्

घ. प्रातिपदिकमात्रात्

**१८. समुचितं मेलनं कुरुत—**

| | |
|---|---|
| १. फ् | A.इय् |
| २. ढ् | B.एय् |
| ३. ख् | C.आयन् |
| ४. छ् | D.ईन् |
| ५. घ् | E.ईय् |

क. B C D E A

ख. C B D A E

**ग. C B D E A**

घ. C B A D E

**१९. 'औडुलोमिः' इत्यत्र केन सूत्रेण इञ्-प्रत्ययः—**

क. अत इञ्

**ख. बाह्वादिभ्यश्च**

ग. लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः

घ. यञिञोश्च

**२०. एषु कः फक्-प्रत्ययान्तः ?**

क. गाङ्गः

ख. बैदः

**ग. गार्ग्यायणः**

घ. गार्ग्यः

**२१. 'उडुलोमाः' इत्यत्र कः प्रत्ययः—**

क. अ

ख. अञ्

ग. इञ्

घ. अण्

**२२. बिदादिगणे ये शब्दाः ऋषिवाचकेभ्यो भिन्नाः तेषु कस्मिन्नर्थे प्रत्ययविधानम्—**

क. गोत्रे

ख. अनन्तरापत्ये

ग. युवापत्ये

घ. आगतार्थे

**२३. 'ऋष्यन्धक-वृष्णि-कुरुभ्यश्च' इति सूत्रेण कः प्रत्ययो विधीयते—**

क. यञ्

ख. अञ्

ग. इञ्

**घ. अण्**

**२४. 'कन्यायाः अपत्यम्' इति विग्रहे किं रूपं साधु ?**

क. कान्यम्

ख. कान्या

ग. कानीनः

घ. कानेयः

**२५. पाण्डोः अपत्यम्/पाण्डूनां जनपदानां राजा इति विग्रहे किं रूपं साधु ?**

क. पाण्डा

**ख. पाण्ड्यः**

ग. पाण्डवः

घ. पाण्डय

# लघुसिद्धान्तकौमुद्यां प्रदत्ताः रक्ताद्यार्थाः



१.तेन रक्तं रागात्

२.नक्षत्रेण युक्तः कालः

३.दृष्टं साम

४.परिवृतो रथः

५.तत्रोद्धृत ममत्रेभ्यः

६.संस्कृतं भक्षाः

७.सास्य देवता

८.तस्य समूहः

९.तदधीते

१०.तद्वेद

# ‘तेन रक्तम्’ अर्थे प्रत्ययविधानम्



{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्**— तेन रक्तं रागात् (४,२.१)

**अर्थः**— रञ्जकद्रव्यवाचकात् तृतीयान्तात्समर्थात् ‘रक्तम्’ इत्यस्मिन् अर्थे अण् स्यात् ।

- रज्यतेऽनेनेति= रागः। (बाहुलकात् करणे घञ्)
- जिस द्रव्य से रँगा जाए उसे राग कहते हैं।
- कषायेण रक्तं वस्त्रं= काषायम् ॥

कषायेण रक्तम्
कषाय टा + अण्
काषाय + अ
काषाय् + अ
काषायम् (वस्त्रम्)




कुङ्कुमेन रक्तं वस्त्रम्= कौङ्कुमम्
कुसुम्भेन रक्तं वस्त्रम्= कौसुम्भम्

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु रक्ताद्यर्थाः)

# ‘नक्षत्रेण युक्तः कालः’ इत्यर्थे प्रत्ययविधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** नक्षत्रेण युक्तः कालः (४,२.३)

**अर्थः—** नक्षत्रवाचकात् तृतीयान्तात् समर्थात् ‘युक्तः’ काल इत्यर्थे अण् स्यात्।

**वार्तिकम्—** तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्।

**अर्थः—** नक्षत्रसम्बन्धिनि अणि परतः तिष्यपुष्ययोर्यलोपः स्यात्

○ पुष्येण युक्तं ‘पौषम्’ अहः॥ (पुष्येण= पुष्यसमीपस्थेन चन्द्रमसा)

❖ लुप्-विधायकं विधिसूत्रम्—

**सूत्रम्—** लुबविशेषे (४,२.४)

**अर्थः—** पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य (अहोरात्रात्मकस्य) कालस्यावान्तरविशेषश्चेन्न गम्यते।

○ अद्य पुष्यः॥

पुष्येण युक्तम्
पुष्य टा + अण्
पौष्य + अ
पौष्य् + अ
पौष् + अ
पौषम् (अहः)

कृत्तिकाभिर्युक्तम्= कार्तिकम्
मघया युक्तम्= माघम्

# ‘दृष्टं साम’ इत्यर्थे प्रत्ययविधानम्



{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— दृष्टं साम (४,२.७)**

अर्थः— तृतीयान्तात् ‘दृष्टम्’इत्यर्थेऽण् स्यात् यद्दृष्टं तत् साम चेत्।

- तेनेत्येव।
- वसिष्ठेन दृष्टं= वासिष्ठं साम॥

❖ ड्यत्-ड्यप्रत्यय-विधायकं विधिसूत्रम्—

**सूत्रम्— वामदेवाड्ड्यड्ड्यौ (४,२.९)**

अर्थः— तृतीयान्ताद् वामदेवशब्दात् ‘दृष्टम्’ इत्यर्थे ‘ड्यत्-ड्य’ एतौ प्रत्ययौ भवतः यद्दृष्टं तत् साम चेत् ।

- वामदेवेन दृष्टं साम= वामदेव्यम्॥

वसिष्ठेन दृष्टम्
वशिष्ठ टा + अण्
वाशिष्ठ + अ
वाशिष्ठ् + अ
वासिष्ठम् (साम)

वामदेवेन दृष्टम्
वामदेव टा + ड्यत्/ड्य
वामदेव + य
वामदेव् + य (टेः)
वामदेव्यम् (साम)

# ‘परिवृतो रथः, तत्रोद्धृतममत्रेभ्यः’ इत्यर्थयोः प्रत्ययविधानम्



{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— परिवृतो रथः (४,२.१०)

अर्थः— तृतीयान्तात् ‘परिवृत’ अस्मिन्नर्थेऽण् प्रत्ययः ~~भवति~~ स्यात्, यः परिवृतः स रथश्चेत्।

○ वस्त्रेण परिवृतो= वास्त्रो रथः॥

परिवृतः= ढका हुआ/लिपटा हुआ

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— तत्रोद्धृतममत्रेभ्यः (४,२.१४)

अर्थः— पात्रवाचकात् सप्तम्यन्तात् ‘उद्धृतम्’ इत्यर्थे ‘अण्’ स्यात्।

○ शरावे उद्धृतः= शाराव ओदनः॥

अमत्रम्= पात्रम्

शारावः= सकोरा

वस्त्रेण परिवृतः
वस्त्र टा + अण्
वास्त्र + अ
वास्त्र् + अ
वास्त्रः (रथः)

शरावे उद्धृतः
शराव ङि + अण्
शराव + अ
शाराव् + अ
शारावः (ओदनः)

लघुसिद्धान्तकौमुद्याम्
(तद्धितेषु रक्ताद्यर्थाः)

# 'संस्कृतं भक्षाः' अर्थे प्रत्ययविधानम्



{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— संस्कृतं भक्षाः (४,२.१६)

अर्थः— सप्तम्यन्तादण् स्यात् संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः।

○ भ्राष्ट्रेषु संस्कृता= भ्राष्ट्रा यवाः॥

भ्राष्ट्रेषु संस्कृता
भ्राष्ट्र सुप् + अण्
भ्राष्ट्र + अ
भ्राष्ट्र + अ
भ्राष्ट्राः (यवाः)

भ्राष्ट्रः = भाड़
संस्कृतः= संस्कृत किया हुआ/पका/भुना

कलशे संस्कृता = कालशाः
कुम्भे संस्कृता = कौम्भाः

# ‘सास्य देवता’ इत्यर्थे प्रत्ययविधानम्



{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सास्य देवता (४,२.२४)**

अर्थः— प्रथमान्तात् समर्थाद् ‘अस्य देवता’ इत्यर्थे यथायथमणादयः स्युः।

○ इन्द्रो देवतास्येति= ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्॥

○ घन्-प्रत्यय-विधायकं विधिसूत्रम्—

**सूत्रम्— शुक्राद् घन् (४,२.२६)**

अर्थः— प्रथमान्तात् शुक्रशब्दात् ‘अस्य देवता’ इत्यर्थे घन्-प्रत्ययः स्यात्।

○ शुक्रियम्॥

○ ट्यण्-प्रत्यय-विधायकं विधिसूत्रम्—

**सूत्रम्— सोमाट्ट्यण् (४,२.३०)**

अर्थः— प्रथमान्तात् सोमशब्दात् ‘अस्य देवता’ इत्यर्थे ट्यण्-प्रत्ययः स्यात्।

○ सौम्यम्॥

शुक्र देवतास्य
शुक्र सुँ + घन्
शुक्र् + इय=

सोमो देवतास्य
सोम सुँ + ट्यण्
सौम् + य=

इन्द्रो देवतास्य
इन्द्र सुँ + अण्
ऐन्द्र + अ (अश्वपत्यादिभ्यश्च)
ऐन्द्रम् (हविः)

पशुपतिः देवतास्य
पशुपति सुँ + अण्
पाशुपति + अ (अश्वपत्या..)
पाशुपतम् (हविः)

बृहस्पतिः देवतास्य
बृहस्पति सुँ + ण्य
बार्हस्पति + य (दित्यदित्या..)
बार्हस्पत्यम् (हविः)

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु रक्ताद्यर्थाः)

# ‘सास्य देवता’ इत्यर्थे प्रत्ययविधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ यत्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— वाय्वृतुपित्रुषसो यत् (४,२.३१)

अर्थः— प्रथमान्तात् समर्थाद् वायु-ऋतु-पितृ-उषस्-शब्देभ्यः ‘अस्य देवता’ इत्यर्थे यत्-प्रत्ययः स्यात्।

○ वायव्यम्। ऋतव्यम्॥

○ रीङ्-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— रीङ् ऋतः (७,४.२७)

अर्थः— अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः।

○ यस्येति च— पित्र्यम्। उषस्यम्॥

| | |
|---|---|
| वायुः देवतास्य | ऋतुः देवतास्य |
| वायु सुँ + यत् | ऋतु सुँ + यत् |
| वायो+ य (ओर्गुणः) | ऋतो+ य |
| वाय् अव्+ य (वान्तो...) | ऋत अव्+ य) |
| वायव्यम् (हविः) | ऋतव्यम्(हविः) |

| | |
|---|---|
| पितुः देवतास्य | उषः देवतास्य |
| पितृ सुँ + यत् | उषस् सुँ + यत् |
| पित् री+ य (रीङ् ऋतः ) | उषस् + य |
| पित् र्+ य (यस्येति च) | उषस्यम् (हविः) |
| पित्र्यम् (हविः) | |

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु रक्ताद्यर्थाः)

# पितृव्य-मातुल-मातामह-पितामहस्य निपातनम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

❖ निपातनसूत्रम्— {मूलपाठः}

**सूत्रम्— पितृव्य-मातुल-मातामह-पितामहाः(४,२.३६)**

**अर्थः—** एते निपात्यन्ते। पितुर्भ्रातरि व्यत्, मातुर् डुलच्, मातापितृभ्यां पितरि डामहच् प्रत्ययः निपात्यते।

- पितुर्भ्राता पितृव्यः।
- मातुर्भ्राता मातुलः।
- मातुः पिता मातामहः।
- पितुः पिता पितामहः॥

पितुर्भ्राता
पितृ ङस् + व्यत्
पितृ+ व्य
पितृव्यः =(चाचा/ताऊ)

मातुर्भ्राता
मातृ ङस् + डुलच्
मातृ + उल
मात् + उल (टेः)
मातुलः= (मामा)

मातुः पिता
मातृ ङस् + डामहच्
मातृ + आमह
मात् + आमह (टेः)
मातामहः= (नाना)

पितुः पिता
पितृ ङस् + डामहच्
पितृ + आमह
पित् + आमह (टेः)
पितामहः = (दादा)

# 'तस्य समूहः' इत्यर्थे प्रत्ययविधानम्



{मूलपाठः}

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तस्य समूहः (४,२.३७)**

अर्थः— षष्ठ्यन्तात्समर्थात् 'समूहे' इत्यर्थे यथाविहितमणादयः स्युः।

○ काकानां समूहः= काकम् ॥

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— भिक्षादिभ्योऽण् (६,४.१४६)**

अर्थः— भिक्षादिभ्यः षष्ठन्तेभ्यः समूहेऽर्थे अण्-प्रत्ययः स्यात्।

○ भिक्षाणां समूहो= भैक्षम्। गर्भिणीनां समूहो= गार्भिणम्। इह

○ वार्तिकम्— **भस्याढे तद्धिते।** इति पुंवद्भावे कृते –

अर्थः— 'स्त्रीभ्यो ढक्' इति ढभिन्ने तद्धिते परतो भस्य पुंवत्।

❖ प्रकृतिभाव-विधायकं विधिसूत्रम्— (शत्रन्ताद् 'अनुदात्तादेरञ्' इत्यञि यौवतम् इति चेन्नै संस्करणे अधिकः पाठः।)

**सूत्रम्— इनण्यनपत्ये (४,२.३७)**

अर्थः— अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्।

○ तेन नस्तद्धित इति टिलोपो न। युवतीनां समूहो= यौवनम् ॥

| काकानां समूहः | भिक्षाणां समूहः |
| --- | --- |
| काक आम् + अण् | भिक्षा आम् + अण् |
| काक् + अ | भैक्ष् + अ |
| काकम् | भैक्षम् |

(अचित्तहस्तिधेनोष्ठक्)

गर्भिणीनां समूहः
गर्भिणी आम् + अण्
गार्भिणी + अ (अनुदात्तादेरञ्) इति प्राप्ते
गार्भिन् + अ (नस्तद्धिते) इति प्राप्ते
गार्भिणम्

युवतीनां समूहः
युवती + अण् (अनुदात्तादेरञ्) इति प्राप्ते
यौवन् + अ (नस्तद्धिते) इति प्राप्ते
यौवनम् {काशिकाकारमते- यौवतम्}

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु रक्ताद्यर्थाः)

# 'तस्य समूहः' इत्यर्थे प्रत्ययविधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ तल्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— ग्राम-जन-बन्धुभ्यस्तल् (४,२.४३)

अर्थः— षष्ठ्यन्तग्राम-जन-बन्धुभ्यः 'समूहे' इत्यर्थे तल्-प्रत्ययः स्यात्।

○ तलन्तं स्त्रियाम्। ग्रामता। जनता। बन्धुता।

○ वार्तिकम्— (गजसहायाभ्यां चेति वक्तव्यम्)। गजता। सहायता।

○ वार्तिकम्— (अह्नः खः क्रतौ)। अहीनः॥

अर्थः— षष्ठ्यन्ताद्-अहन्-शब्दात् 'समूहे' इत्यर्थे ख-प्रत्ययः स्यात्, समूहः क्रतुसाधकश्चेत्।

❖ ठक्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— अचित्तहस्तिधेनोष्ठक् (४,२.४७)

अर्थः— अचित्ताः= अप्राणिनः, तद्वाचिभ्यः, हस्ति-धेनुशब्दाच्च समूहे ठक्प्रत्ययः स्यात्।

❖ कादेश-विधायकं विधिसूत्रम्—

सूत्रम्— इसुसुक्तान्तात्कः (७,३.५१)

अर्थः— इस् उस् उक्-त्-अन्तात्परस्य ठस्य कः।

○ साक्तुकम्। हास्तिकम्। धैनुकम्॥

ग्रामाणां समूहः
ग्राम आम् + तल्
ग्राम + त
ग्रामता

जनानां समूहः
बन्धूनां समूहः
गजानां समूहः
सहायानां समूहः

अह्नां समूहः
अहन् आम् + ख
अहन् + ईन
अह + ईन
अहीनः (नस्तद्धिते)

सक्तूनां समूहः
सक्तु आम् + ठक्
साक्तु + क
साक्तुकम्

धेनूनां समूहः

हस्तीनां समूहः
हस्तिन् आम् + ठक्
हास्त् + इक (नस्तद्धिते)
हास्तिकम्

# ‘तदधीते’ ‘तद्वेद ’ इत्यर्थयोः प्रत्ययविधानम्



{मूलपाठः}

❖ अणादि-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— तदधीते तद्वेद (४,२.५९)

अर्थः— द्वितीयान्ताद् ‘अधीते’ इत्यर्थे ‘वेद’ इत्यर्थे वा उक्ता अणादयो वक्ष्यमाणाश्च प्रत्ययाः वा स्युः।

❖ ऐजागमविधायकं वृद्धिनिषेधकञ्च विधिसूत्रम्—

सूत्रम्— न य्वाभ्याम् पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् (७,३.३)

अर्थः— पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः, किंतु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः। (ञिति णिति किति च तद्धिते परतः।)

○ व्याकरणमधीते वेद वा= वैयाकरणः॥

व्याकरणमधीते वेद वा
व्याकरण अम् + अण्
व्याकरण + अ
व् ऐ याकरण + अ
व् ऐ याकरण् + अ
वैयाकरणः

ऐ
यकार
पदान्ता
वकार
औ
न वृद्धिः

न्यायम् अधीते वेद वा= नैयायिकः ठक्
इतिहासम् अधीते वेद वा= ऐतिहासिकः
पुराणम् अधीते वेद वा= पौराणिकः
यज्ञम् अधीते वेद वा= याज्ञिकः

# ‘तदधीते’ ‘तद्वेद’ इत्यर्थयोः प्रत्ययविधानम्



❖ वुन्-प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

सूत्रम्— क्रमादिभ्यो वुन् (४,२.६१)

अर्थः— द्वितीयान्तात् क्रमादिभ्यः ‘अधीते’ इत्यर्थे ‘वेद’ इत्यर्थे वा ‘वुन्’प्रत्ययः स्यात्।

- क्रमकः। पदकः। शिक्षकः। मीमांसकः॥

॥ इति रक्ताद्यर्थकाः॥ ३॥

क्रममधीते वेत्ति वा
क्रम अम्+ वुन्
क्रम+ अक
क्रम्+ अक
क्रमकः

पदमधीते वेत्ति वा
पद अम्+ वुन्
पद+ अक
पद्+ अक
पदकः

शिक्षामधीते वेत्ति वा
शिक्षा अम्+ वुन्
शिक्षा+ अक
शिक्ष्+ अक
शिक्षकः

मीमांसामधीते वेत्ति वा
मीमांसा अम्+ वुन्
मीमांसा+ अक
मीमांस्+ अक
मीमांसकः

# अथ चातुरर्थिकाः

(चतुर्णां सूत्राणामर्थाः= चतुरर्थाः, तत्र भवाः= चातुरर्थिकाः)



## १.तदस्मिन् अस्ति

(इसमें है— ऐसा देश)

## २. तेन निर्वृत्तम्

(उसने बसाया/बनाया— ऐसा देश)

देशप्रसिद्धिः चेत्

## ३. तस्य निवासः

(उसका निवास— ऐसा देश)

## ४.अदूरभवश्च

(उससे जो दूर नहीं— ऐसा देश)

# ‘तदस्मिन्नस्ति’‘तेन निर्वृत्तम्’ इत्यर्थयोः प्रत्ययविधानम्



{मूलपाठः}

❖ अणादि-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तदस्मिन्नस्तीति देशे तन्नाम्नि (४,२.६७)**

अर्थः— प्रथमान्तात् प्रथमोच्चरितात् समर्थात् प्रातिपदिकात् ‘अस्मिन् अस्ति’ इत्यर्थे अणादयः वा स्युः, तन्नामा देशप्रसिद्धश्चेत्।

○ उदुम्बराः सन्त्यस्मिन्देशे= औदुम्बरो देशः॥

❖ अणादि-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तेन निर्वृत्तम् (४,२.६८)**

अर्थः— तृतीयान्तात् प्रथमोच्चरितात् समर्थात् प्रातिपदिकात् ‘निर्वृत्तम्’ इत्यर्थे अणादयः वा स्युः, तन्नामा देशप्रसिद्धश्चेत्।

○ कुशाम्बेन निर्वृत्ता नगरी= कौशाम्बी॥

अत्र देशशब्देन स्थानमात्रं विवक्षितम्। तेन यथा सम्भवं प्रदेश-ग्राम-नगर-जनपदादीनामपि ग्रहणम्।

उदुम्बराः सन्त्यस्मिन्देशे
उदुम्बर जस्+ अण्
औदुम्बर् + अ
औदुम्बरः (देशः)

योगरूढशब्दानां सिद्धये इदं सूत्रम्। आधुनिकसङ्केतेषु नास्य प्रवृत्तिः।

कुशाम्बेन निर्वृत्ता नगरी
कुशाम्ब टा+ अण्
कौशाम्ब् + अ
कौशाम्ब+ ङीप्
कौशाम्बी (नगरी)

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु चातुरर्थिकाः)

# 'तस्य निवासः' 'अदूरभवः' इत्यर्थयोः प्रत्ययविधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ अणादि-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तस्य निवासः (४,२.६९)**

अर्थः— षष्ठ्यन्तात् प्रथमोच्चरितात् समर्थात् प्रातिपदिकात् 'निवास' इत्यर्थे अणादयः वा स्युः, तन्नामा देशप्रसिद्धश्चेत्।

○ शिबीनां निवासो देशः= शैबः॥

❖ अणादि-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अदूरभवश्च (४,२.७०)**

अर्थः— षष्ठ्यन्तात् प्रथमोच्चरितात् समर्थात् प्रातिपदिकात् 'अदूरभव' इत्यर्थे अणादयः वा स्युः, तन्नामा देशप्रसिद्धश्चेत्।

○ विदिशाया अदूरभवं नगरं= वैदिशम्॥

शिबीनां निवासो देशः
शिबि आम् + अण्
शैव + अ
शैबः (देशः)

विदिशाया अदूरभवं नगरम्
विदिशा ङस् + अण्
वैदिश् + अ
वैदिशम् (नगरम्)

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु चातुरर्थिकाः)

# जनपदे लुप्-विधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ प्रत्ययस्य लुप्-विधायकं विधिसूत्रम्—

सूत्रम्— **जनपदे लुप् (१,२.५१)**

अर्थः— जनपदे वाच्ये चातुरर्थिकस्य लुप्॥

❖ प्रकृतिवल्लिङ्गवचनातिदेशसूत्रम्—

सूत्रम्— **लुपि युक्तवद्व्यक्तिवचने (१,२.५१)**

अर्थः— लुपि सति प्रकृतिवल्लिङ्गवचने स्तः।

- पञ्चालानां निवासो जनपदः= पञ्चालाः।
- कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः॥

❖ लुप्-विधायकं विधिसूत्रम्—

सूत्रम्— **वरणादिभ्यश्च (४,२.८२)**

अर्थः— वरणादिभ्यश्च चातुरर्थिकस्य लुप् स्यात्।

- अजनपदार्थ आरम्भः।
- वरणानामदूरभवं नगरं= वरणाः॥

पञ्चालानां निवासो जनपदः
पञ्चाल आम् + अण्
पञ्चाल + अ
पञ्चालाः (जनपदः)

ग्रामाणां समूहो=जनपदः

कुरूणां निवासो जनपदः= कुरवः
अङ्गानां निवासो जनपदः= अङ्गाः
वङ्गानां निवासो जनपदः= वङ्गाः
कलिङ्गानां निवासो जनपदः= कलिङ्गाः

वरणानामदूरभवं नगरम्
वरणा आम् + अण्
वरणा + अ
वरणाः

वरणा नाम नदी काश्या उत्तरे प्रसिद्धा।

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु चातुरर्थिकाः)

# चातुरर्थिक- ड्मतुप्-प्रत्ययस्य विधानम्



{मूलपाठः}

❖ ड्मतुप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** कुमुद-नड-वेतसेभ्यो ड्मतुँप् (४,२.८७)

**अर्थः—** 'कुमुद-नड-वेतस्' एतेभ्यः चातुरर्थिकः ड्मतुँप्-प्रत्ययः स्यात्।

❖ वकार-आदेशविधायकं विधिसूत्रम् —

**सूत्रम्—** झयः (८,२.१०)

**अर्थः—** झयन्तान्मतोर्मस्य वः।

(अत्वन्तस्य चाधातोः)

(उगिदचां सर्वनामस्थानेऽधातोः)

○ कुमुद्वान्। नड्वान्॥

| कुमुदाः सन्ति अस्मिन् देशे | नडाः सन्ति अस्मिन् देशे |
|---|---|
| कुमुद जस् + ड्मतुँप् | नड जस् + ड्मतुँप् |
| कुमुद + मत् | नड + मत् |
| कुमुद् + मत् | नड् + मत् |
| कुमुद् + वत् | नड् + वत् |
| कुमुद्वत् + सुँ | नड् वत् + सुँ |
| कुमुद्वात् + स् | नड्वात् + स् |
| कुमुद्वा नुँम् त् + स् | नड्वा नुँम् त् + स् |
| कुमुद्वान् | नड्वान् |






लघुसिद्धान्तकौमुद्याम् (तद्धितेषु चातुरर्थिकाः)

# चातुरर्थिक- ड्मतुप्-प्रत्ययस्य विधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

❖ वकार-आदेशविधायकं विधिसूत्रम् — {मूलपाठः}

**सूत्रम्—** **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (८,२.९)

**अर्थः—** मवर्णावर्णान्ताद् मवर्णावर्णोपधाच्च यवादिवर्जितात् परस्य मतोर्मस्य वः।

○ वेतस्वान्॥

✓ म् च अं च अनयोः समाहारः= मं तस्मात्= मात् , तस्य अधिकृत 'पदात्' इत्येतद् विशेषणत्वेन तदन्तविधिः इत्याह— **मवर्णावर्णान्ताद्** इति।

✓ मात् इत्यावर्तते। एतच्चोपस्थितत्वाद् उपधायाः तेन **मवर्णावर्णोपधाच्च** प्रातिपदिकादित्यपि लभ्यते।

म्-वर्णान्त
अ-वर्णान्त
म्-उपधा
अ-उपधा
यवादिवर्जितात्
मतुँ
व्

वेतसाः सन्ति अस्मिन् देशे
वेतस जस् + ड्मतुँप्
वेतस् + मत्
वेतस् + वत्
वेतस्वत् + सुँ
वेतस्वान्त् + स्
वेतस्वान्

**यवादिगणः—**

यव। दल्मि। ऊर्मि। भूमि। कृमि। क्रुञ्चा। वशा। द्राक्षा। एतेषां मादुपधायाश्च। इति प्राप्नोति। ध्रजि, ध्वजि, सञ्जि इत्येतेषां छन्दसीरः ८.२.१५ इति। हरित्, ककुत्, गरुतित्येतेषां झयः ८.२.१० इति। इक्षु, मधु, द्रुम, मण्ड, धूम इत्येतेषां संज्ञायाम् ८.२.११ इति। आकृतिगणश्च यवादिः।

# चातुरर्थिक- ड्वलच्-वलच्प्रत्यययोर्विधानम्



{मूलपाठः}

❖ ड्वलच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— नड-शादाड्ड्वलच् (४,२.८८)**

अर्थः— 'नड-शाद' शब्दाभ्यां चातुरर्थिकः ड्वलच्-प्रत्ययः स्यात्।

○ नड्वलः। शाद्वलः॥

❖ वलच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— शिखाया वलच् (४,२.८९)**

अर्थः— 'शिखा' शब्दात् चातुरर्थिकः वलच्-प्रत्ययः स्यात्।

○ शिखावलः॥

॥ इति चातुरर्थिकाः॥ ४॥

| नडाः सन्ति अस्मिन् देशे | शादाः सन्ति अस्मिन् देशे |
|---|---|
| नड जस् + ड्वलच् | शाद जस् + ड्वलच् |
| नड + वल | शाद + वल |
| नड् + वल | शाद्+ वल |
| नड्वलः | शाद्वलः |

शिखाः सन्ति अस्मिन् ग्रामे

शिखा जस् + वलच्

शिखा + वल

शिखावलः